तेषां दयसे न कस्मा" दिति भट्टिः । पत्ते श्वस्त्यं, श्वस्तनमिति त्यं तनौ वक्ष्येते ॥ १४४ ॥

॥३५॥ सन्ध्यादेर्ऋतुनक्षत्र-
प्रभेदाच्चाण् फले पुनः ।
संवत्सरात् पर्वणि च
प्रावृषस्त्वेण्यमीरितम् ॥१४५॥

सन्ध्यादिगणात्तत्र भवमित्यर्थे अणेव । यथा, सान्ध्यं, सन्धिवेलं, आमावस्यं, त्रायोदशं, चातुर्दशं, पाञ्चदशं, पौर्णमासं, प्रातिपदं, वा तमः इति । अत्र ऋतुभेदो ग्रीष्मादिः, तस्मात्तत्र भवमित्यर्थे ग्रैष्मं, शैशिरं, तदन्तविधिश्चा पूर्वग्रैष्मम्, अवयवादृतूनामित्युत्तरस्य वृद्धिः । नक्षत्रभेदात्तु पुष्ये भवं पौषं औषधं, तैषं रौहिणमित्यादि । संवत्सरात्तु फले पर्वणि च भवार्थेऽणेव यथा, सांवत्सरं फलं, पर्व वा, अन्यत्र तु कालार्थत्वादिकण् । यथा, सांवत्सरिकं, कर्म । प्रावृषि भव इत्यर्थे एण्यः । यथा, प्रावृषेण्यं तृणम् । "प्रावृषेण्यं पयोवाह" मिति रघुकाव्यम् ॥ १४५ ॥

॥३६॥ वर्षातः स्यादिकण् हेम-
न्तादण्णप्यत्र वा तलुक् ।
सायं चिरं प्रगे प्राह्णे,
कालार्थाव्ययतस्तनट् ॥१४६॥

वर्षासु भवं वार्षिकं तृणम्। हेमन्ताद्भवार्थे यथेकण तथा अण्णपि, परन्त्वणि तकारस्य वा लुक्। तेन हैमन्तिकं, हैमनं, हैमन्तमिति त्रिविधप्रयोगः। तदन्तविधिना पूर्वहैमनमित्यादिरपि प्रयोगः । सायमादिभ्यस्तु, सायन्तनं, चिरन्तनं, प्रगेतनं, प्राह्णेतनं, दिवातनं, दोषातनमित्यादौ भवार्थे तनट्, टानुबन्धत्वात् सायन्तनी तिथिः ॥ १४६ ॥

॥३७॥ परुतश्च परारेश्च,
चिराच्च त्नो विभाषया ।
पुराशब्दात्तथा नो वा,
मध्वाह्नादेश्च वा तनट् ॥१४७॥

परुत्नं, परारित्नं, चिरत्नं, पक्षे परुत्तनं, परारितनं चिरतनं, पुरा शब्दादपि भवार्थे वा नः । तेन पुराणं, पुरातनमिति ॥ १४८ ॥

॥३८॥ तदापद्भ्यान्तु कालात् स्यादिकण् ङीब् वा स्त्रियां ततः ।
मनुष्ये पर्वतादीयण्णीयोऽन्यत्र विभाषया ॥१४८॥

तत्काले भवमित्यर्थे तत्कालशब्दादिकण्। तात्कालिको बोधः, एवमापत्कालिकः, तदन्तस्य स्त्रिया वा ङीप्। यथा, तात्कालिकी, तात्कालिका, मतिरित्यादौ।

पर्वते भवो मनुष्य इत्यर्थे पर्वतादीयण् । पार्वतीयो नरः, ततोऽन्यत्र तु पर्वतीयं, पार्वतं, वा फलमित्यादावण्णपि ॥ १४८ ॥

॥३९॥ दिगादिभ्यो यदेव स्या-
च्छरीरावयवादपि ।
दृति-बस्त्यस्थि-कुक्षिभ्य,
एयण् स्यात् कलसादहेः ॥१४९॥

दिशि भवमित्यर्थे, दिश्यम्, एवमाद्यम्, अन्त्यं, रहस्यं, दिव्यं, उदर्य्यं, यूथ्यं, वश्यं, दण्ड्यमित्यादौ यत् । शरीरावयवादपि, यथा, दन्ते भवमित्यर्थे दन्त्यम्, एवं कर्ण्यम्, ओष्ठ्यं, मूर्द्धन्यं, मुख्यं, उरस्यम्, इत्यादौ । दृतौ भवमित्यर्थे तु दृत्यादेरेयणणेव । यथा, दार्त्तेयं, वास्तेयं, अस्थेयं, कौक्षेयम् । "असिं कौक्षेयमुद्यम्य, चकारापनसं मुख" मिति भट्टिः । कालसेयम्, आहेयमिति ॥ १४९ ॥

॥४०॥ चतुर्मासादयज्ञे य,
ण्णव्ययीभावतस्तथा ।
अन्तःपूर्वादिकण्णेवं,
समानात्तत्परादपि ॥१५०॥

चतुर्मासेषु भवमित्यर्थे चातुर्मास्यं व्रतं, चतुःपदस्याषाढादिचतुष्कत्वेन लक्षकत्वान्नात्र द्विगुरतः पञ्च-

कपालश्चरुरित्यत्रैव द्विगोस्तद्धितस्य न लुक् । यज्ञे तु, चातुर्मासो यागः इत्यणेव, अन्तःपूर्वादव्ययीभावाद्भवार्थे इकण् । यथा आन्तर्दैहिकम्, आन्तर्गणिकम् । अव्ययीभावादित्येव, तेनान्तःकरणे भवमान्तःकरणं दुःखमित्यणेव । समानात्तत्पराच्च, यथा समाने भवं सामानिकम् । "सामानिकोऽयं युवयोः प्रयासः ।" समानदैशिकम् ॥१५०॥

॥४१॥ काद्यन्तवर्गादीयः स्या,-
ज्जिह्वामूलाङ्गुलेरपि ।
मित्राद्युत्तरतो वर्गात्,
यदीनावीय एव च ॥१५१॥

कवर्गे भवः कवर्गीयो वर्णः, इतीयः । एवञ्चवर्गीयः, टवर्गीयः, इत्यादि । जिह्वामूलादङ्गुलेश्च जिह्वामूलीयः, अङ्गुलीयः । मित्राद्युत्तरवर्गात् तु यत्-ईन ईयश्च । यथा, मित्रवर्गे भव इत्यर्थे मित्रवर्ग्यः, मित्रवर्गीणः, मित्रवर्गीयः, इत्यादि ॥१५१॥

॥४२॥ स्त्रीपुंभ्यां नण्-स्नणौ तत्र,
भवे भावे तु वा तयोः ।
स्वरादौ तद्धिते प्राप्ते,
गोर्यदेव विधीयते ॥१५२॥

स्त्रियां भवः स्त्रैणः । "स्त्रैणे नीता विकृतिं लघिम्ना" इति भट्टिः । पुंसि भवः पौंस्नः । स्त्रियाः

पुंसश्च भावेऽर्थे तु नञ् स्नञौ विकल्पेन स्याताम् । तेन स्त्रिया भावः स्त्रैणं, स्त्रीत्वञ्च, पुंसो भावः पौंस्नं, पुंस्त्वञ्च । गोपदात्तु, यद्यदर्थे स्वरादितद्धितं प्रसक्तं तत्तदर्थे तदेव साकांक्षं । तेन गोरपत्यं, गौर्देवता यस्य, गवा चरति, गोः समूह इत्याद्यर्थे गव्यमित्येव प्रयोगः । गोत्वं गोवदित्यादौ तु त्वादिको न स्वरादिः । तत्र भवः ॥ १५२ ॥

॥४३॥ ये भवार्थे यतः प्रोक्ता,
स्तद्धितप्रत्ययाः पुरा ।
जातेऽर्थेऽपि ततस्ते स्यु,
र्विशेषविधिना विना ॥१५३॥

मथुरायां भव इत्यर्थे इव, मथुरायां जात इत्यर्थेऽप्यणोऽतिदेशः । एवं स्त्रैणः, पौंस्नः, ग्राम्यः, ग्रामीणः, इत्यादौ गणादेरपि, प्रावृष एण्यप्राप्ताविकः, प्रदोषादेरिकण्णादिप्राप्तौ च कादिर्विशेषविधेर्वक्ष्यते ॥१५३॥

॥४४॥ प्रावृषस्तत्र जातेऽर्थे,
स्यादिकः शरदस्त्विकण् ।
संज्ञायां विहितः पूर्वा-
ह्णापराह्णादितस्तु कः ॥१५४॥

प्रावृषि जातमित्यर्थे प्रावृषिकं पत्रं, प्रावृषिका वृष्टिः । शरदि जातमित्यर्थे तु संज्ञायामिकण् । यथा,

शारदिकाः मुद्गप्रभेदाः, शारदमन्नम्, पूर्वाह्णे जात-मित्यर्थे तु पूर्वाह्णादिभ्यः कः, यथा, पूर्वाह्णकं, अपराह्णकं, मध्याह्नकमित्यादि । एवमार्द्रायां मूलायां जात-मित्यर्थे आर्द्रकं, मूलकं, के सममस्येति ह्रस्वः ॥१५४॥

॥४५॥ अण्णकः स्यादमावास्या,
शब्दात्तद्धिकृतादपि ।
स्थानान्तादथ गोशाल-
खरशालाच्च नित्यशः ॥
जातार्थकस्य लुग्वा तु,
वत्सशालादितो भवेत् ॥१५५॥

अमावास्यायां जात इत्यर्थेऽण् अकश्च स्यात् । यथा, आमावास्यः, अमावास्यको बालकः । तद्धिकृतादमावास्याशब्दादपि यथा च, आमावस्यः, अमावास्याकः । स्थानान्ताद्विहितस्य जातार्थकतद्धितस्य नित्यं लुक् स्यात् । यथा, गोस्थाने जातमित्यर्थे गोस्थानं पत्रम्, एवमश्वस्थानं शशस्थानमित्यादौ । गोशालायां जातमित्यर्थे गोशालं, खरशालम्, इत्यत्राप्येवम् । नित्यममीषां क्लीबत्वं, एभ्यो जातार्थस्य नित्यं लुग्विधानात् । अश्विन्यादितो जातार्थकस्य वा लुगिति प्रतीयते, अत एव "मधातोऽणो न लुग्भवेत् इत्यग्रे निषेधः सङ्गच्छत इति" निबन्धकारः । वत्सशालादितस्तु जातार्थस्य वा लुक् । यथा, वत्स-

शालायां जात इत्यर्थे वत्सशालो, वात्सशालश्च ६८
एवमभिजिव आभिजितो वा बालकः ।

वत्सशालाभिजिच्चित्रा रेवती रोहिणी तथ
अश्वयुङ् मृगशीर्षश्च वत्सशालादिको गणः
मृगशिरसि भवं जातं इत्यर्थे तु न तद्धितस्य
भिधानात् ॥१५५॥

॥ ४६ ॥ अनुराधा-तिष्यःपुष्यौ,
हस्त-स्वाती पुनर्वसू ।
विशस्वा बहुलैतेभ्यो,
नित्य जातार्थकस्य लुक् ॥ १५६

अनुराधायां जातोऽनुराधः, स्त्रीप्रत्ययस्य
तद्धितलुकीति लुक् । एवं तिष्यः, पुष्यः, हस्तः, स्वाति
पुनर्वसुः, विशाखो, बहुलः । कथं बाहुलेयस्तारका
दिति, बहुला कृत्तिका तत्र जात इति संज्ञाया
यण् ॥ १५६ ॥

॥ ४७ ॥ श्रविष्ठाषाढयोरेयण्,
उण् वा शतभिषक् पदात् ॥१५७

इति महामहोपाध्यायश्रीजगदीश-तर्कालङ्कार-भट्टाचार्य्यकृतौ
शब्दशक्तिप्रकाशिकायां ।

तद्धितप्रकरणं समाप्तं ।

समाप्तश्चायंग्रन्थः ।

शिवम्